धारणं श्रेष्ठं बाहुमूले गलेऽथवा ॥ ६ ॥ सर्वेषां चैव यन्त्राणां विधिरेष उदाहृतः । सुभगो दर्शनीयश्च स्वजनानां विशेषतः ॥ ७ ॥ यन्त्रस्य धारणाद्देवि स भवेन्नात्र संशयः । कर्पूरकुंकुमाभ्यां च रोचनागरुकेसरैः ॥ ८ ॥ लिखेद्यन्त्रवरं श्रेष्ठं मन्त्रतन्त्रविचक्षणः ॥ ९ ॥

इति श्रीयन्त्रचि० म० प्र० उ० तृ० पी० व० दा० यावज्जीवं जनवश्यकरं नाम द्वादशं यन्त्रम् ॥ १२ ॥

श्रीशिव उवाच ॥ जगद्वश्यं महायन्त्रं शृणु देवि सुशोभनम् । कर्पूरं मृगनाभिश्च चन्दनं रोचनं तथा ॥ १ ॥ जातीकाष्ठेन संलेख्यं भूर्जपत्रे प्रयत्नतः । प्रणवं च वकारं च जें ह्रीं डं च तथैव च ॥ २ ॥ पूर्वपङ्क्तौ तु संलेख्यं ताराद्यं बीजपञ्चकम् । दें डं ह्रीं प्रणवं चैव डंकारं च तथैव च ॥ ३ ॥ पंक्तौ द्वितीये संलेख्यं यत्नतो बीजपञ्चकम् । तृतीयपङ्क्तौ संलेख्यं वंकारं तदनंतरम् ॥ ४ ॥ डकारं च जगन्नाम वंकारं तदनन्तरम् । ह्रींकारश्च ततश्चान्ते एवं वै बीजपञ्चकम् ॥ ५ ॥

जगद्वश्यकर यन्त्रम् ।




( सोना, चांदी, तांबा ) में वेष्टितकर दण्ड अथवा गलेमें धारण करेगा तो इस मनोहर राज्य वश्यकारक यंत्रवरके प्रतापसे स्वबन्धुगणका दर्शनीय तथा अति माननीय होगा ॥ १–९ ॥

इति श्रीयंत्रचिन्तामणौ महाकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे पं० बलदेवप्रसादमिश्रकृतभाषाटीकासहिते तृतीयपीठिकायां यावज्जीवं जनवश्यकरं नाम द्वादशं यंत्रम् ॥ १२ ॥

श्रीशंकरजी बोले–हे देवि ! जगत्‌के वश्यकारक अतिशोभायमान यंत्रको श्रवण करो । उसका विधान यह है–दो रेखायुक्त एक चौकोर यंत्रको भोजपत्रके ऊपर चमेलीकी लकड़ीकी कलम बनाकर, केशर, कस्तूरी, लालचन्दन, गोरोचनसे लिखकर उक्त यंत्रके भीतर तीन तिरछी रेखा खैंचकर पहली रेखामें ॐ, वं, जें, ह्रीं, डं; दूसरी रेखामें दें, डं, ह्रीं, ॐ, डं; तीसरी रेखामें वं,

तत्रापि विलिखेन्नूनं टंकारं तु चतुर्थकम् । एवं बीजानि संलेख्य चतुःकोणं तु कारयेत ॥ ६ ॥ द्विरेखया महाकार्यं जगद्वश्यकरं परम् । पूजयेत्त्रिदिनं देवि सुगन्धैः सुमनोहरैः ॥ ७ ॥ त्रिलोह-वेष्टितं कृत्वा धारयेद्बाहुमध्यतः । जगद्वश्यं भवेत्तस्य यन्त्रं यावत्तु तिष्ठति ॥ ८ ॥ संपूज्य नित्यमेवादौ यन्त्रं देवार्च-नादिषु ॥ ९ ॥

इति श्रीयं० चिं० म० प्र० उ० तृ० व०दा० जगद्वश्य त्रयोदश यन्त्रम् ॥ १३ ॥

श्रीशिव उवाच ॥ यदा स्वभृत्यः क्रुद्धः सन्मर्म सर्वं प्रका-शते । न शक्यते निराकर्तुं देशकालबलेन च ॥ १ ॥ तदा तन्मोहनार्थाय स्वकीयार्थस्य सिद्धये । यन्त्रं पिशाचिकानाम कर्तव्यं सुविचक्षणैः ॥ २ ॥ साध्यनाम लिखित्वा तु वर्तुलं वेष्टयेत्ततः । चतुर्दलं प्रकर्तव्यं बीजयुक्तं मनोहरम् ॥ ३ ॥ ह्रींकाराश्चतुरो लेख्या दलमध्ये चतुर्दिशम् । रोचना भूर्जपत्रे तु लेखन्या विलिखेन्नरः ॥ ४ ॥ संपूज्य गन्धपुष्पाद्यैर्धूपैर्नानाविधैरपि ।

पिशाचियन्त्रम् ।




---

हं, जगत् थं, च, ह्रीं बीजोंको लिखे । तत्पश्चात् तीन दिनतक गन्ध पुष्पादि-कोंसे पूजनकर त्रिलोहमें बंदकर देहमें धारण करे तो जबतक यह यंत्र देहमें बंधा रहेगा तबतक जगत् वश्य रहेगा । परन्तु प्रथम देवता आराधनके समय प्रतिदिन नियमपूर्वक यंत्रराजका पूजन करना योग्य है ॥ १-९ ॥

इति श्रीयंत्रचिन्तामणौ महाकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे तृतीय-पीठिकायां वशीकरणाधिकारे पं० बलदेवप्रसादमिश्रकृतभाषाटीकासहिते जगद्वश्यं त्रयोदशं यंत्रम् ॥ १३ ॥

श्रीशिवजी बोले, हे प्रिय ! यदि सेवक क्रुद्ध होकर सम्पूर्ण मनादिकको प्रकाशकर नाश करनेके यत्नमें उद्यत हो परन्तु देशकालके वशसे स्वामी उससे किसी प्रकार निवेधमी न कर सके, तब उसके वशके लिये एक वर्तुल चक्र भोजपत्रके ऊपर गोरोचनसे रोचकर पूर्वादि चारों दिशाओंमें कमल दलमें

ततस्तद्दधिमध्ये तु क्षिपेद्यन्त्रवरं शुभे ॥ ५॥ स वश्यो जायते नूनं यन्त्रराजप्रसादतः ॥ यन्त्रं पिशाचिकं नाम भृत्यवश्यकरं परम् ॥ ६ ॥ न देयं यस्यकस्यापि स्वयं रुद्रेण भाषितम् ॥७॥

इति यं० चि० भृत्यवश्यकरं पिशाचिसंज्ञं चतुर्दशं यन्त्रम् ॥ १४ ॥

श्रीशिव उवाच॥क्रूरप्रकृतिकः स्वामी यदा संसेव्यते जनैः। सेव्यमानोऽपि हि सदा भवत्येव दुराग्रही ॥१॥ खलैः परिवृतो नित्यं दुराचारो महीपतिः । उत्तमो वाऽधमो वाऽपि म्लेच्छो वा प्रभुतां गतः ॥ २ ॥ यन्त्रं कालानलं कुर्यात्तदा तद्वश्यसिद्धये । साध्यनामाक्षरं लेख्यं ह्रीँकारे गर्भमध्यगम् ॥३॥ यावन्तश्चाक्षरा नाम्नि तावन्तश्च तथा लिखेत ॥ ईँकारमन्ते संलेख्यं रोचनाभूर्जपत्रके ॥ ४ ॥ त्रिरावर्तं चतुष्कोणं दीर्घेण फलवत्कृतम्।

क्रूरवश्यकरं कालानलयन्त्रम् ।

| | | | | |
|---|---|---|---|---|
| ह्रीँदे | ह्रीँव | ह्रीँद | ह्रीँत्त | ईँ |

-युक्तकर चक्रके भीतर सेवकके नामके अक्षरोंको लिख पूर्वादि चारों दिशाओंमें ह्रींकार बीजोंको स्थापितकर पिशाचिका नाम यंत्रको लिखे । फिर गंध पुष्पादिकोंसे उक्त यंत्रका पूजनकर दहीके भीतर रखदे तो वह सेवक व्यक्ति निश्चय वशीभूत होगा । यह पिशाचिका नामक यंत्र सेवक व्यक्तिके वश्यका परम स्थान है इसको श्रीशंकरने स्वयं प्रकाशित किया है, अतः प्रत्येकको न देना चाहिये ।किन्तु अधिकारीकोही देना योग्य है,नहीं तो गुप्त रक्खे१-७

इति श्रीयन्त्रचिन्तामणौ महाकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे तृतीयपीठिकायां बलदेवप्रसादमिश्रकृतभाषाटीकायां भृत्यवश्यकरे पिशाचिसंज्ञं चतुर्दशं यंत्रम् ॥ १४ ॥

श्रीशिवजी बोले-हे शैलसुते ! यदि दुष्ट पुरुषोंसे युक्त क्रूरप्रकृति स्वामी मनुष्योंके यथायोग्य सेवन करनेपरभी अपने दुराग्रह भावको न छोडै, तब उसके मोहनके लिये गोरोचनसे भोजपत्रके ऊपर तीन रेखासे मिश्रित चतुष्कोण कालानल यंत्रको लिखकर ह्रीं बीजकी रेखाके भीतर साध्यव्यक्तिके नामके अक्षर लिख अंतमें ईं इस बीजको लिखे। परन्तु जितने साध्यव्यक्तिके

राजिकाप्रतिमां कुर्यात्तत्पादस्य च पांसुना ॥ ५ ॥ हृन्मध्ये प्रक्षिपेत्तस्य यन्त्रं कालानलं महत् । संपूज्य प्रतिमां तां तु चुल्लीपार्श्वे निखन्य च ॥६॥ पूरयेत्तां प्रयत्नेन चतुर्दश्यां महानिशि ॥ एतत्करणमात्रेण स वश्यो जायते ध्रुवम् ॥७॥ अजारक्तेन संमिश्रं भक्तं पूपं तथैव च । बलिदानं प्रदातव्यं दिक्पालप्रीतये तदा ॥ ८ ॥ महाकालाय स्वाहेति मन्त्रेण जुहुयात्ततः । एवं क्रमेण संस्कृत्य तत्र अष्टोत्तरं शतम् ॥ ९ ॥ तदेव भक्तं साज्यं तु रक्तपुष्पैश्च मिश्रितम् । यन्त्रं कालानलं नाम त्रिदशैरपि पूजितम् ॥ १० ॥

इति श्रीयंत्रचिन्तामणौ कालानलं नाम पञ्चदशं यंत्रम् ॥ १५ ॥

श्रीशिव उवाच॥ वाणिज्यार्थं तु वाणिज्यं लाभार्थं वाञ्छितं पथि । तेषां मध्ये यदा कोऽपि प्रदुष्टो जायते नरः ॥ १ ॥ मार्गदेशे प्रभुर्वापि तदा यन्त्रं प्रकल्पयेत् । ह्रींकारोदरमध्ये तु साध्यनाम लिखेन्नरः ॥ २ ॥ उपरिष्टाच्चतुर्दिक्षु स्वाहान्ते

---

–नामके अक्षर हों उतनेही ह्रीं वर्णके होने चाहियं, अर्थात् ह्रीं बीजोंकी कोई मुख्य गणना इस प्रसंगमें नही है, इसका उदाहरण यंत्रमें देखना, तत्पश्चात् वृक्षके नीचेसे धूलि लाकर एक राजिका प्रतिमाको निर्माणकर उस प्रतिमाके हृदय भागमें उक्तकालानल यंत्रको स्थापितकर गंधादिकोंसे पूजन करके कृष्णपक्षकी रात्रिमें चूल्हेकी बगलमें खोदकर उक्त प्रतिमाको मन्त्रसहित गाडदे, फिर बकरेके रुधिरसे मिले भातसे दिक्पालोंकी प्रसन्नताके लिये बलिदानकरके उक्त पदार्थमें घी लाल फूल औ महाकालायेति मंत्रसे अष्टोत्तरशत जपकरे तो इस देवताओंके पूजित कालानलके प्रयोगसे साध्यमनुष्य निश्चय वशीभूत होजायगा॥१–१०॥

इति भाषाटीकासहित यंत्रचिन्तामणिकी तृतीयपीठिकामें कालानल-
नामवाला पंद्रहवां यंत्र ॥ १५ ॥

---

श्रीशिवजी बोले–यदि वाणिज्य व्यवहारके करनेवाले पुरुषोंको वाणिज्य मार्गमें प्रभू अथवा अन्य कोई व्यक्ति दुखदाई हो तो उनके वशके लिये रक्त गोरोचनसे भोजपत्रके ऊपर दो रेखावाले चतुष्कोण यंत्रको लिखकर भीतरके भागमें ह्रीं बीजरेखाके मध्यमें साध्यव्यक्तिके नामाक्षरोंको निर्माणकर

प्रणवादिकम् । मध्ये आकर्षय लिखेच्चतुर्दिक्षु क्रमेण तु ॥ ३ ॥ पश्चात्तद्वेष्टयेद्यन्त्रं चतुष्कोणं द्विरेखया । कोणे कोणे त्रिशूलौ द्वौ चतुर्दिक्षु प्रकल्पयेत ॥ ४ ॥ एवं कृत्वा प्रयत्नेन पूजयित्वा

उच्छिष्टपिशाचयन्त्रम् ।




सुगन्धकैः । स्वरक्तेन तु संमिश्रं रोचनाभूर्जपत्रके ॥ ५ ॥ लिखित्वा खण्डवत्कृत्वा रहसि प्रक्षिपेत्ततः । ओमाकर्षय स्वाहा इमं मन्त्रं जपेत्तदा ॥ ६ ॥ तत्क्षणाज्जायते वश्यो महाक्रूरोऽपि मानवः ॥ ७ ॥

इति प० चि० ना० म० प्र० उ० सं०तृ० पी० व० दामोदरपण्डितोद्धृते दुष्टवशीकरणं उच्छिष्टपिशाचिकं नाम षोडशं यन्त्रम् ॥ १६ ॥

---

—पूर्वादि चारों दिशाओंमें ओं आकर्षय स्वाहा इसको यंत्रके भीतरही लिखै कि, जिससे साधकके नामके अक्षर मध्यगत हो जाँय, परन्तु यंत्रके चारों कोनोंमें दो त्रिशूल भी लिखने योग्य हैं । फिर गंधादिकोंसे पूजन ओं आकर्षय स्वाहा, इस मंत्रको पढकर यंत्रके टुकडेकर उक्त मार्गमें डालदे तो अति क्रूर प्रकृतिवाला मनुष्यभी उसी समय वशीभूत हो जायगा ॥ १–७ ॥

इति भाषाटीकासहित यंत्रचिन्तामणिका तृतीयपीठि नामें उच्छिष्टपिशाचिनात्मक सोलहवां यन्त्र ॥ १६ ॥

श्रीशिव उवाच॥यदा महाबलः शत्रोर्घातं कर्तुं हि वाञ्छति। तदा तस्यानुकूल्यार्थं यन्त्रं कुर्वीत कण्टकम् ॥ १ ॥ साध्यनाम लिखेन्मध्ये वर्तुलं वेष्टयेत्ततः । ईंकारश्च भ्यकारश्च विसर्गान्तश्चतुर्दिशम् ॥ २ ॥ एकैकं तु लिखित्वा तु वर्तुलं वेष्टयेत्ततः । श्मशानभस्मना लेख्यमर्कपत्रद्वयोपरि ॥ ३ ॥ संपुटं मेलयित्वा तु वेधयेत्कण्टकैस्ततः । निखन्य पूरयेद्यन्त्रं श्मशाने निशि पूजितम् ॥ ४ ॥ बलिदानं प्रदातव्यं भूतेऽह्नि भयतो नरः । तत्क्षणाज्जायते शत्रुः सानुकूलो न संशयः ॥ ५ ॥ कण्टकाख्यं महायन्त्रं दुष्टमोहनकं परम । स्वशक्त्या दक्षिणां दद्यात्कालरात्रिः प्रीयतामिति ॥ ६ ॥

दुष्टमोहनकरं कण्टकयंत्रम् ।




इति महाशत्रुसानुकूल्यकर कण्टकाख्यं नाम सप्तदशं यन्त्रम् ॥ १७ ॥

---

श्रीशिवजी बोले—जब कि, अतिबलवान् शत्रु घात करनेकी इच्छा करता हो तो उसको अनुकूल करनेके वास्ते श्मशानकी भस्म लाकर दो आकके पत्तोंपर पृथक् २ एक गोलाकार चक्र खैंचकर उसके भीतर साध्य व्यक्तिके नामके अक्षर लिख"ईंभ्यः"विसर्ग मिश्रित इन दो बीजोंको पूर्वादि चारों दिशाओंमें लिखकर फिर एक गोलाकार चक्र और खैंचे कि जिसके खेंचनेसे उक्तचक्र मध्यवर्ती होजाय,तत्पश्चात् दोनों पत्रोंको संपुटमें लेकर कांटोंसे छेदकर कृष्णपक्षकी रात्रिमें पूजन करके श्मशानभूमिमें खोदकर गाडदे और भूतादि बलिप्रदान करे तो शत्रु उसी समय वशीभूत होजायगा, यह दुष्टमोहनकालकंटक नाम यंत्र है, इसका यथायोग प्रयोगकर " हे कालरात्रि ! प्रसन्न हो " इसको उच्चारण कर ब्राह्मणोंको दक्षिणा दे ॥ १-६ ॥

इति यंत्रचिन्ता० तीसरी पाठि० बल० भाषाटीकायां कण्टकाख्य-नामवाला दुष्टमोहनयन्त्र ॥ १७ ॥

कोणेकोणे दले न्यस्य ह्रींकारं तु विचक्षणः । रोचना-कुंकुमेनैव मृगनाभिस्तु चन्दनम् ॥ ५ ॥ एकीकृत्य लिखेद्यन्त्रं भूर्जपत्रे सुविस्तृते । त्रयोदश्यां सिते पक्षे साधकश्चोत्तरामुखः ॥ ६ ॥ तद्यन्त्रं पूजयेन्नित्यं रात्रौ रात्रौ वरानने । भोगैर्नाना-




स्त्रीसौभाग्यकरं ललितायंत्रम् ।

विधैः पुष्पैर्वस्त्रालंकारभूषणैः ॥ ७ ॥ एवं सप्तदिनं कृत्वा तदन्ते तव तुष्टये । स्त्रियः सौभाग्यसंयुक्ता भोजयेत् सप्त-संख्यया ॥ ८ ॥ शंकरस्य प्रिये देवि ललिते प्रीयतामिति ॥ रूपं देहि यशो देहि सौभाग्यं देहि मे श्रियम् ॥ ९ ॥ भगवति वाञ्छितं देहि प्रियमायुष्यवर्धनम् । एवं मन्त्रं समुच्चार्य ततश्चार्यं विसर्जयेत ॥ १० ॥ तद्यन्त्रं धातुनावेष्ट्य सदा कण्ठे तु धारयेत् । सुभगा रूपसंपन्ना पतिप्रियतमा भवेत् । ललिताख्यं महामन्त्रं स्त्रीणां सौभाग्य-कारकम् ॥ ११ ॥ इति श्रीय० स्त्रीणां सौभाग्यकरं ललिताख्यमेकोनविंशं यन्त्रम् १९

---

–ह्रीं बीज लिखकर उक्त दलोंमें एक एक ह्रीं वर्ण लिखकर कृष्णपक्षकी त्रयोदशीके दिन रात्रिके समयमें उत्तरकी ओरको मुखकरके सात रात्रितक नियम पूर्वक नानाप्रकारके भोग तथा गंधादिकोंसे तुम्हारी प्रसन्नताके कारण यन्त्रराजका पूजनकर सौभाग्यवती सात स्त्रियोंको भोजन करावे । तत्पश्चात् वक्ष्यमाण मंत्रको उच्चारणकर विसर्जन करै । मंत्रो यथा–शंकरस्य प्रिये देवि ललिते प्रीयतामिति । रूपं देहि यशो देहि सौभाग्यं देहि मे श्रियम् । भगवति वाञ्छितं देहि प्रियमायुष्यवर्धनम् ॥ फिर यंत्रको धातुके बने ताबीजमें बन्द करके जो स्त्री कंठमें धारण करेगी तो वह यन्त्रराजके स्थित रहनेतक सौभाग्य तथा रूपादिसे युक्त प्रीतमको अत्यन्त प्यारी होगी । यह ललिताख्ययंत्र स्त्रियोंको अनेक सौभाग्यका देनेवाला है ॥ १–११ ॥

इति यंत्र० ललितानाम सौभाग्यदायक उन्नीसवां यन्त्र ॥ १९ ॥

श्रीशिव उवाच ॥ शृणु देवि प्रसन्नेन यन्त्रं भर्तृप्रसादनम्। संलिख्याथ प्रियं नाम सांकारपुटितं शुभम् ॥ १ ॥ अधोपरि तथा लेख्यं सांकारद्वितयं शुभम्। ततस्तद्वेष्टयेत्सम्यक् वर्तुलं रेखयैकया ॥ २ ॥ तस्योपरि दलान्यष्टौ ह्रींकारसहिताँल्लिखेत्। रोचनाकुङ्कुमेनैव भूर्जपत्रे लिखेन्नरः ॥ ३ ॥ त्रिदिनं पूजयेन्नित्यं रात्रौ रात्रौ तु पूर्ववत्। ततः स्नात्वा चतुर्थेऽह्नि पूजयेत्सुभगात्रयम् ॥ ४ ॥ अनङ्गवल्लभे देवि त्वं च मे प्रीयतामिति।

स्त्रीसौभाग्यकरं यन्त्रम्।

एवं प्रियं महावश्यं कुरु त्वं स्मरवल्लभे ॥ ५ ॥ एतन्मन्त्रं समुच्चार्य पूजयित्वा तु ताः स्त्रियः। तद्यन्त्रं धातुनाऽऽवेष्ट्य कृत्वा कण्ठे प्रधारयेत ॥ ६ ॥ पतिर्दासो भवेत्तस्या यन्त्रराजप्रसादतः। सौभाग्यमतुलं तस्या जायते नात्र संशयः ॥ ७ ॥ न सपत्नीं गणयति सौभाग्यमदर्पिताम्। एका सुवासिनी भोज्या चतुर्दश्यां सितेतरे ॥ ८ ॥ पक्षे पक्षे रतिप्रीत्यै पूज्यं यन्त्रं तु नित्यशः। यासां तासां न दातव्यं यन्त्रं सौभाग्यवर्धनम् ॥ ९ ॥

इति पं० स्त्रीणां सौभाग्यकर विंशतितमं यन्त्रम् ॥ २० ॥

---

श्रीशिवजी बोले–हे देवि ! प्रसन्न मन होकर पतिवश्यकारक यंत्रको सुनो। गोलाकार एक चक्रको गोरोचनसे भोजपत्रके ऊपर खेंचकर अष्टदलसे वेष्टितकर उक्त गोलाकार यंत्रके भीतर पूर्वादि चारों भागोंमें सांबीजको लिखकर अनुस्वार युक्त साध्यव्यक्तिके नामके अक्षरोंको लिखे और उक्त आठ दलोंमें ह्रीं बीजोंको लिख. तीन रात्रितक यंत्रका गंधादिकोंसे पूजनकर चौथे दिन विधानपूर्वक सौभाग्यवती ३ स्त्रियोंको पूजितकर वक्ष्यमाण मंत्रका उच्चारण करे। मंत्र यथा–"अनङ्गवल्लभे देवि त्वं च मे प्रीयतामिति। एवं प्रियं महावश्यं कुरु त्वं स्मरवल्लभे ॥" इस प्रकारसे यंत्रका पूजनकर धातुवेष्टित कर कंठमें धारण करे तो पति दासकी समान होजायगा और यंत्रराजके प्रतापसे उसका

श्रीशिव उवाच ॥ योषिद्वश्यं प्रवक्ष्यामि शृणु देवि सुशोभनम् । रोचनाकुङ्कुमेनैव श्रीखण्डमृगनाभिना ॥ १ ॥ भूर्जपत्रे तु संलेख्यं जातीकाष्ठेन यन्त्रकम् । ऐं ह्रीं क्लीं च ततो नाम ऐं ह्रीं क्लीं च पुनस्तथा ॥ २ ॥ एवं संपुटितं कृत्वा चतुष्कोणं तु वेष्टयेत् । उपर्यधोऽपि विलिखेत्पश्च बीजानि यत्नतः ॥ ३ ॥ ऐं ह्रीं क्लीं च तथा क्लीं च ऐं चान्ते च पुनस्तथा । कोणेषु विन्यसेद्बीजान् ऐं ह्रीं क्लीं च तथैव च ॥ ४ ॥ दलाकृतिस्तु कर्तव्या बीजानामुपरि क्रमात् । एवं चतुर्दलं कृत्वा बीजयुक्तं मनोहरम् ॥ ५ ॥ राजिकां प्रतिमां कृत्वा मदनस्य तु कार्मुके । तस्या हृदि तु संस्थाप्य तद्यन्त्रं पूजयेत्ततः ॥ ६ ॥ भोगैश्च विविधैर्गन्धैर्धूपदीपैः फलैः शुभैः । रात्रौ रात्रौ प्रकर्तव्या दिनान्ते प्रत्यहं शुभे ॥ ७ ॥ एवं कृते च

---

-प्रताप अतुल होगा। इत्यादि उपरोक्त क्रियाओंके करनेपर भी पति सौभाग्यमदसे दर्पित स्त्रीको कुछ न समझे तो शुक्लपक्षकी प्रति चतुर्दशीमें पतिकी प्रीतिके लिये एक सौभाग्यवती स्त्रीको भोजन कराकर पुनः यंत्रराजका पूजन करे, यह सौभाग्यवर्द्धकयंत्र विना अधिकारीके और किसीको न देवे ॥१-९॥

इति यंत्रचिन्तामणिकी पं० बलदेवप्रसादमिश्रकृतभाषाटीकायुत तीसरी पीठिकामें स्त्रीसौभाग्यकारक नामवाला

बीसवाँ यंत्र ॥ २० ॥

श्रीशिवजी बोले-हे देवि ! स्त्रीवश्यकारक अतिश्रेष्ठ यंत्रको कहता हूँ श्रवण करो । गोरोचन, कुंकुम, लालचंदन, कस्तूरी इन सब वस्तुओंको इकट्ठाकर भोजपत्रपर चमेलीकी कलमसे एक अंगुलके अंतरमें कर्णिका युक्त दो रेखाओंके ऊपर नीचे दो आकार कल्पना करे। फिर कर्णिकाओंमें ऐं, ह्रीं, क्लीं, ऐं बीजोंको पूर्णकर उक्त दोनों दलाकारोंमें ऐं, ह्रीं, क्लीं, क्लीं, ऐं इन बीजोंको लिखकर रेखाओंके भीतर ऐं, ह्रीं, क्लीं, इन बीजोंको आदि अंतमें लगाकर अनुस्वारयुक्त साध्यव्यक्तिके नामको लिखे । तत्पश्चात् कार्मुकके ऊपर(राजिका)राईसे कामदेवकी प्रतिमाको निर्माणकर उक्त यंत्रको हृदय भागमें स्थापितकर गंध, पुष्प, धूप, दीप, फल, नैवेद्य इत्यादि शुभ वस्तुओंसे सायंकालके समय सिद्धिपर्यंत प्रत्येक रात्रिमें वक्ष्यमाण मंत्रको उच्चारणकर कामदेवका पूजन करे ।

श्रीशिव उवाच ॥ शृणु देवि प्रवक्ष्यामि मानिनीमानमर्दनम् । यन्त्रं सुदुर्लभं लोके विख्यातं मानमर्दनम् ॥ १ ॥ तुरगस्य तु रक्तेन रोचना भूर्जपत्रके।प्रणवं च ततो ह्रीं च साध्यनामाक्षरं पृथक् ॥ २ ॥ नामाक्षराणि ह्रींकारपुटितानि विचक्षणः । आद्यन्ते प्रणवं लेख्यमेकपंक्तौ विचक्षणैः ॥ ३ ॥ ततस्तद्वेष्टयेत्सम्यक् चतुष्कोणं तु रेखया । उपर्यधश्च संलेख्यं पूर्ववद्बीजसंपुटम् ॥ ४ ॥ तिर्यग्भागे द्विभागे तु पूर्ववन्नामसम्पुटम् । कोणे दलाकृतिं कुर्यान्मदनाकृतिमध्यतः ॥ ५ ॥

स्त्रीवश्यकर मदनमर्दनयन्त्रम् ।



एवं यन्त्रं सुसंलेख्यं मदनप्रतिमां शुभाम् । मदनस्य तु काष्ठेन कृत्वा हृदि विनिक्षिपेत ॥ ६ ॥ सरन्ध्रं हृदयं कुर्याद्यथा यन्त्रं सुतिष्ठति । संवेष्ट्य प्रक्षिपेन्नूनं यन्त्रं तस्योपरि स्फुटम ॥ ७ ॥

---

श्रीशिवजी बोले—हे देवि ! सुदुर्लभ लोकप्रसिद्ध मानिनी स्त्रियोंके मान मर्दन करनेवाले यन्त्रको कहता हूं सुनो घोडेके रुधिरमें भोजपत्रके ऊपर मदनकाष्ठकी कलमसे एक अंगुलके अंतरसे दो तिरछी रेखा खींचकर उनके आदि अंतमें कमलदल आकार लगाकर उक्त रेखाओंके ऊपर नीचेके दोनों भागोंमें कुछएक गोलाई युक्त दो रेखा खींचे । फिर "ॐ ह्रीं देहीं वहीं दहीं महीं ॐ" इन ग्यारह बीजोंको प्रत्येक कोष्ठमें स्थापितकर यन्त्रको पूर्ण करै । तत्पश्चात मदनकाष्ठसे एक कामदेवकी प्रतिमाको निर्माण करै कि, जिसके हृदयमें ऐसा एक छिद्र हो कि, जिसमें उक्तयन्त्र सुभीतेके साथ प्रविष्ट होसके, फिर लालचंदन लाल

रक्तचन्दनमाल्याद्यैः पूजयेत्प्रत्यहं तु तत् । एकाविंशद्दिनं यावत्सा तस्य वशतामियात् ॥ ८ ॥

इति यं० चिं० स्त्रीवशीकरं मदनमर्दनं नाम द्वाविंशं यन्त्रम् ॥ २२ ॥

श्रीशिव उवाच ॥ अतः परं प्रवक्ष्यामि राजस्त्रीवश्यकारकम् । यथा तद्दृष्टिपातेन कामबाणहता इव ॥ १ ॥ पतन्ति सहसा दृष्ट्वा मानिन्यो मदविह्वलाः । रोचनाकुङ्कुमेनैव भूर्जपत्रे लिखेन्नरः ॥ २ ॥ कर्पूरेण समायुक्तं जातीकाष्ठेन यत्नतः।षट्कोणस्य तु मध्ये तु साध्यनामप्रतिष्ठितम् ॥ ३ ॥ क्रौंकारं सर्वतो लेख्यं कोणोपरि प्रयत्नतः। पूर्वकोणान्तराले तु ह्रींकाराद्वितयं लिखेत् ॥ ४ ॥ कोणमध्ये लिखेच्चैकं ह्रींकारं पूर्वसं-

कामाक्षं यन्त्रम् ।



आदिवस्तुओंसे पूजनकर यंत्रेश्वरको उक्तप्रतिमाके हृदयमें स्थापितकर इक्कीस दिनतक पूजन करै तो साध्यव्यक्ति वशमें होजायगी ॥ १-८ ॥

इति यंत्रचिन्तामणिकी तीसरी पीठिकामें स्त्रीवशीकरण मदनमर्दन नामवाला बाईसवां यंत्र ॥ २२ ॥

श्रीशिवजी बोले-अब राजस्त्रीवश्यकारक यंत्रको कहता हूं कि, जिसके दर्शनमात्रसे कामबाणसे हतकी समान मानिनी स्त्रियें देखकर मदसे व्याकुल हो पतित होंगी । विधान यथा-गोरोचन, कुंकुम, कपूर इन वस्तुओंको एकत्रित करके भोजपत्रके ऊपर चमेलीकी कलमसे एक षट्कोण यंत्रको निर्माणकर उसके बहिर्भागमें एक गोलाकार चक्र खेंचै और दक्षिणभागमें तीन और ईशानभागमें एक दल लिखकर उक्त षट्कोणके भीतर साध्यव्यक्तिके नामके

मितम् । तत्सर्वं वेष्टयेत्पश्चाद्वर्तुलं रेखया शुभम् ॥ ५ ॥ दक्षिणे त्रिदलं कुर्यादीशान्येऽपि दलं तथा । ह्रींकारं दलमध्ये तु क्रमेण प्रविलेखयेत् ॥ ६ ॥ एवं विलिख्य तद्यन्त्रं पूजयेद्भक्तिभावतः । गन्धपुष्पैः सुनैवेद्यैः शुक्लाम्बरधरः स्वयम् ॥ ७ ॥ चिन्तयेत्तां स्त्रियं रात्रौ यन्त्रस्य पुरतः स्थितः । एवं सप्तदिनं कृत्वा तदन्ते ब्राह्मणाः स्त्रियः ॥ ८ ॥ संभोज्या विविधैर्भोज्यैः कामाक्षी प्रीयतामिति । शक्त्या च दक्षिणां दद्याद्भोजयेत्साधकः स्त्रियम् ॥ ९ ॥ त्रिलोहवेष्टितं कृत्वा बाहुमूले तु धारयेत् । तं दृष्ट्वा राजपत्न्यश्च कन्दर्पज्वरपीडिताः । स्वयं संप्रार्थयेन्नित्यं का कथेतरयोषिताम् ॥ १० ॥

इति य० चि० राजस्त्रीवश्यकर कामाक्षं नाम त्रयोविंशं यन्त्रम् ॥२३॥

---

अक्षर लिख प्रत्येक कोणमें ह्रींबीजको लिखे । तत्पश्चात् पूर्वकोणमें क्रोंबीजको लिख दो ह्रीं बीजोंको लिखे और पाँचों कोणोंमें सिर्फ एक एक क्रों बीजको लिख उक्तदलोंमें एक एक ह्रीं बीज लिखे । पुनः भक्तिभावसे गंध पुष्प नैवेद्यादि पदार्थोंसे यंत्रका पूजन कर श्वेतवस्त्रको धारण कर उक्त यंत्रको सम्मुख रखकर रात्रिके समय साध्यस्त्रीका चिन्तवन करै. इस प्रकार सात दिनतक पूजनादि क्रियाओंको करके शक्तिके अनुसार ब्राह्मणोंकी स्त्रियोंको विविधप्रकारके भोज्य पदार्थोंसे भोजन कराकर यथाशक्ति दक्षिणा देकर कहै कि "कामाक्षी प्रीयताम्" फिर त्रिलोहके तावीजमें बंदकरके भुजामें धारण करनेवाले साधकको देखकर कामज्वरसे पीडितहुई राजस्त्रियां स्वयं प्रार्थना करेंगी, अन्यस्त्रियोंकी तो बातही क्या है ॥ १–१० ॥

इति यन्त्रचिन्तामणिकी तीसरी पीठिकामें राजस्त्रीवश्यकारक कामाक्षनामक तेईसवां यंत्र ॥ २३ ॥

श्रीशिव उवाच ॥ अतः परं प्रवक्ष्यामि बीजमेकं महाफलम् सततं धारयेन्नित्यं स्त्रीणां प्रियतरो भवेत् ॥ १ ॥ स्त्री चेद्धारयते नित्यं सा सौभाग्यवती भवेत् । सौभाग्यजननं बीजं नृणां चैव विशेषतः ॥ २ ॥ एतद्बीजाक्षरं गोप्यं न देयं यस्य कस्यचित् । सकारं च हकारं च ककारं च तथैव च॥३॥ लकारं च डकारं च ईकारान्तं प्रतिष्ठितम् । एवं क्रमेण संयोज्य अक्षराणां च षट्ककम् ॥ ४ ॥ ईकारस्वरसंयुक्तं विन्दुना परिशोभितम् । रोचनानीरयुक्तेन भूर्जपत्रे लिखेन्नरः ॥ ५ ॥ त्रिदिनं पूजनं कृत्वा हेम्ना वै वेष्टयेत्ततः । पुरुषो बाहुमूले वा नारी चेद्गलके पुनः ॥ ६ ॥ धारयेद्बीजराजं तु स्फुटं दौर्भाग्यनाशनम् । महासौभाग्यजननं श्रीशिवेन प्रतिष्ठितम् ॥ ७ ॥

विजययन्त्रम् ।

स्हीं
क
ल
ड
ई

इति यन्त्रचि० ना० म० प्र० उ० तृ० व० दा० सौभाग्यजननविजयं नाम चतुर्विंश यन्त्रम् ॥ २४ ॥

---

श्रीशिवजी बोले–हे प्रिये ! अत्यन्त फलदायक एक बीजको कहता हूँ कि, जिसके नित्य प्रति धारण करनेसे साधक स्त्रियोंको अत्यन्त प्यारा होगा । विधान यथा–जलमिश्रित गोरोचनसे भोजपत्रके ऊपर तीन रेखा युक्त एक अर्द्ध चन्द्राकार लिखकर, सकार, हकार, ककार, लकार, डकार, ईकार इन छः अक्षरोंको ईकारमें गर्भितकर उक्त अर्द्ध चन्द्राकारके बीचमें स्थापित करे । तत्पश्चात् गन्ध पुष्पादिकोंसे पूजनकर सुवर्णमें लपेटकर पुरुष भुजामें और स्त्री गलेमें धारण करे । मनुष्योंको यह सौभाग्यका देनेवाला अत्यन्त पवित्र बीजराज गुप्त भावसे रखना चाहिये किन्तु हरेकको न देना चाहिये, क्योंकि, उक्त यन्त्रराज शिव प्रतिष्ठित होनेसे शीघ्र दौर्भाग्यनाशक और सौभाग्यजनक भावको धारण करनेवाला है ॥ १–७ ॥

इति यन्त्रचिन्तामणिकी तीसरी पीठिकामें सौभाग्यजननविजय नामवाला चौबीसवाँ यन्त्र ॥ २४ ॥

श्रीशिव उवाच ॥ अतः परं प्रवक्ष्यामि यन्त्रं सौभाग्यदायकम्। स्त्रीणामेव समुद्दिष्टं यन्त्रं कमलसंज्ञकम् ॥ १ ॥ तस्य संधारणाद्देवि वन्ध्या गर्भवती भवेत। मृतवत्सा तु या नारी सा लभेत्पुत्रमुत्तमम् ॥ २ ॥ धृत्वा तु जायते देवि जीवत्पुत्रा न संशयः। रोचनाकुंकुमेनैव भूर्जपत्रे लिखेन्नरः ॥ ३ ॥ प्रणवं तु लिखेत्पूर्वं ह्रींकारस्तदनन्तरम्। ततो रमणनामं च ह्रींकारान्तं प्रतिष्ठितम् ॥ ४ ॥ उपर्यधोऽपि विलिखेत्क्रोंकारमेककं तथा। ततस्तद्वेष्टयेत्सर्वं वर्तुलं रेखयैकया ॥ ५ ॥ तस्योपरि दलान्यष्टौ बीजाक्षरयुतानि च। जूँकारं च चतुर्दिक्षु दलमध्ये तु विन्यसेत् ॥ ६ ॥ ॐकारं च तथा ह्रीं च जूँकारं च तथैव च। ह्रींकारं च पुनर्लेख्यमेवं बीजचतुष्टयम् ॥ ७ ॥ कोणे कोणे दले लेख्यं मध्यदेशे तु साधकः। एवं यन्त्रं सुसंलेख्यं पूजयेत्तु दिनत्रयम् ॥ ८ ॥ भोजयेन्मिथुनं चैकं लोकेशः प्रीयतामिति। पश्चात्तं तन्तुनाऽऽवेष्टय त्रिलोहेन विशेषतः॥ ९ ॥ वर्तुलं मणिवत्कृत्वा हारमध्ये तु धारयेत्। धारणाज्जायते देवि सौभाग्यमतुलं महत् ॥ १० ॥ पुत्रं च लभते नूनं वन्ध्यात्वं च प्रशा-

---

श्रीशिवजी बोले–अब सौभाग्यके देनेवाले यन्त्रको कहता हूं, कमल संज्ञक यन्त्रका स्त्रियोंके लिये प्रयोग करना योग्य है । विधान यथा–गोरोचनसे भोजपत्रके ऊपर एक गोलाकार चक्र खैंचकर बहिर्भाग अष्टदलोंसे सुशोभित कर उक्त गोलाकारके भीतर तीन रेखा कल्पनाकर ऊपर नीचेकी रेखाओंमें ओं ह्रीं इन दो बीजोंको आदिमें मिश्रितकर साध्यव्यक्ति अर्थात् पतिके नामके अक्षर लिख फिर अन्तमें सिर्फ ह्रीं बीजको लगावे । फिर पूर्वादि चारों जूँबीजको लिखकर ओं ह्रीं, जूँ ह्रीं इन चार बीजोंको ईशानादि चारों कोनोंमें स्थापित करे। तत्पश्चात् गन्ध, पुष्प, ताम्बूल, नैवेद्यादि पदार्थोंसे तीन दिनतक पूजनकर, 'हे लोकेश ! प्रीयताम्' इस वाक्यको उच्चारणकर एक स्त्री-पुरुषको भोजन करावे। फिर कच्चेडोरेसे लपेटकर उक्त यंत्रेश्वरको त्रिलोहमें बन्दकर धारण करै तो हे देवि ! अतुल अतिश्रेष्ठ सौभाग्य प्राप्त होगा । इसका और यह भी प्रताप है कि, इसके धारण करनेसे वन्ध्या स्त्री भी गर्भवती होकर

स्याति । कमलाख्यं महायन्त्रं सृष्टं नु ब्रह्मणा पुरा । न देयं यस्य कस्यापि साधकेन वरानने ॥ ११ ॥

कमलाख्ययन्त्रम् ।




इति श्रीयं० सौभाग्यजननं कमलाख्य नाम पञ्चविंश यन्त्रम् ॥ २५ ॥

स्वप्नेन संप्राप्य सदाशिवाच्च दामोदरोऽत्रारचयच्च कल्पम्॥ तस्मिन्महाकल्पवरे सुसत्ये गतः समाप्तिं प्रथमोऽधिकारः ॥१॥

---

–उत्तम पुत्रको प्राप्त कर वंध्याभावसे रहितहो मृतवत्सा उत्तम पुत्रको प्राप्त हो जीवित पुत्रवाली होगी, इसमें किंचित् भी संदेह नहीं। अथवा, हारमें मिलाकर धारण करे तोभी उक्त फल प्राप्त होसकता है, इस कमलाख्य महायंत्रको श्रीब्रह्माजीने कल्पित किया है। अतः साधकको उचित है कि अधिकारी सिवाय और किसीको न दे ॥ १–११ ॥

इति श्रीयंत्र चिन्तामणिकी तीसरी पीठिकामें सौभाग्य-
जनन नामवाला पचीसवाँ यन्त्र ॥ २५ ॥

---

स्वप्नावस्थामें शिवजीसे प्राप्त कर दामोदर पण्डितके बनाये श्रेष्ठकल्प सत्य यन्त्रचिन्तामणिकल्पका प्रथम अधिकार समाप्त हुआ ॥ १ ॥

सद्यन्त्रचिन्तामणिसर्वसिद्धिदे श्रीचन्द्रचूडस्य मुखाद्विनिर्गते । तस्मिंस्तृतीयां किल पीठिकामिमां चकार दामोदरपण्डितः सुधीः ॥ २ ॥ वश्याभिधानं प्रथमाधिकारं शृणोति यो भक्तियुतो मनुष्यः । तस्याशु देवो भगवान्महेशो ददाति लक्ष्मीं विपुलां सुसिद्धिम् ॥ ३ ॥

इति श्रीयन्त्रचिन्तामणौ महाकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे दामोदरपण्डितोद्धृते तृतीयपीठिकायां वश्याधिकारः समाप्तः ॥

इति प्रथमोधिकार ॥

अथाकर्षणाधिकारः । २

जयति जगदशेषद्योतयद्दिव्यभासा विशदकिरणकान्तिः प्रस्फुरच्चन्द्रमौलिः । विषमविषमहाहिप्रोल्लसच्चारुहारः सततमासिततेजा ज्ञानमूर्तिर्महेशः ॥ १ ॥ चिन्तामणौ कल्पवरे चतुर्थी प्रारभ्यते संप्रति पीठिकेयम् । आकृष्टियन्त्राणि परिस्फुटानि विचारयाम्यत्र तु पीठिकायाम् ॥ २ ॥

---

श्रीचन्द्रचूड शिवजीके मुखसे निकले सत् यन्त्रचिन्तामणिकल्पकी तीसरी पीठिका पंडित प्रवर श्रीदामोदरजी इस भाँतिसे करते हुए ॥२॥ इस वश्याधिकारनाम तीसरे अधिकारको जो मनुष्य भक्तिपूर्वक सुनते हैं उनको श्रीशिवजी महाराज प्रसन्न होकर अधिक लक्ष्मी और सुसिद्धि देते हैं ॥ ३ ॥

इति श्रीयंत्रचिन्तामणौ महाकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे दामोदर पंडितोद्धृते पं० बलदेवप्रसादजी मिश्रकृत भाषाटीका सहिततृतीयपीठिकायां वश्याधिकारः समाप्तः ।

---

समस्त संसारको अपनी दिव्य कान्तिसे प्रकाश करनेवाले, विषम विषको धारण करनेवाले, सर्पोंके प्रकाशमान मनोहर हारको धारे, मस्तकमें चन्द्रमाको धारण करनेवाले और निर्मल कान्तिसे शोभायमान होनेवाले तीक्ष्ण तेजको धारण करनेवाले ज्ञानकी मूर्त्तिवाले श्री श्रीशिवजी महाराजकी जय हो ॥१ ॥ अब चिन्तामणिकल्पकी चौथी पीठिका कही जाती है, इस पीठिकामें आकर्षणके यंत्रोंका स्फुट विचार करताहूं ॥ २ ॥

श्रीशिव उवाच-संलिख्य नामानि च भूर्जमध्ये गोरोचना-कुङ्कमचन्दनाभिः । सकारबीजास्तु विसर्गयुक्तास्तस्योपरिष्टाद्विलिखेत्तु पञ्च ॥ १ ॥ इकारमन्ते विनिवेश्य पश्चाद्विसर्गयुक्तौ विलिखेत्सकारौ । क्रौं ह्रीं तथा क्रौं च विलिख्य पंक्तौ वर्णस्य पङ्क्तिर्महता क्रमेण ॥ २ ॥ एवं द्विपङ्क्तौ तु विलिख्य पश्चान्नाम्नस्तथाऽधो विलिखेत्तु पङ्क्तिम् । ह्रीं क्रौं तथा ह्रीं च तथैव च क्रौं विलिख्य नाम्नस्तु अधोविभागे ॥ ३ ॥ ह्रीं क्रौं तथा ह्रीं च विलिख्य पङ्क्तौ तस्याप्यधो वै विलिखेच्च बीजे । दकाररेफौ तु विलिख्य पश्चात्संवेष्टयेत्रिः परिवर्तनेन ॥ ४ ॥ संपूज्य यन्त्रं विधिवच्च पश्चात्सूत्रेण संवेष्ट्य सुपाण्डुरेण । उद्वर्तनेन स्वशरीरजेन विधाय मूर्ति मनुजस्य नूनम् ॥५॥ निधाय तस्या हृदि यन्त्रराजं विधाय चोद्वर्तनकेन पश्चात् । संतापयेत्तं खदिरस्य वह्निना दिनत्रयं यन्त्रवरं त्रिसन्ध्यम् ॥६॥ ॐ देवदत्तं वेगेन आकर्षय २ माणिभद्रस्वाहा ॥ तापनमन्त्रोऽयम् ॥ एवं कृते कर्षति

मणिभद्रयंत्रम् ।

| | | | | | |
|---|---|---|---|---|---|
| सः | सः | सः | सः | सः | इ |
| सः | सः | क्रौं | ह्रीं | क्रौं | |
| देवदत्तः | | | | | |
| ह्रीं | क्रौं | ह्रीं | क्रौं | | |
| ह्रीं | क्रौं | ह्रीं | दर | | |

---

शिवजी बोले-हे कान्ते ! तीन रेखाओं युक्त एक चतुष्कोण यंत्रको गोरोचन, कुकुम, लालचंदनसे भोजपत्र पर लिखकर उक्त यंत्रके भीतर पाँच रेखा कल्पनाकर प्रथम रेखामें पाँच विसर्गयुक्त सकार बीजोंको लिखकर अन्तमें इकार बीज लिखे । फिर दूसरी रेखामें सः सः क्रौं ह्रीं क्रौं इन पाँच बीजोंको लिखे, तीसरी रेखामें साध्य व्यक्तिके नामके अक्षर लिखे, चौथी रेखामें ह्रीं क्रौं ह्रीं क्रौं लिखे और पाँचवीं रेखामें ह्रीं क्रौं ह्रीं दर इन पाँच बीजोंको लिखकर यंत्रकी पूर्ति करे । फिर विधान पूर्वक गंधादिकोंसे पूजन करके लालसूत्रसे बाँधे और अपने शरीरके उद्वर्तनसे मनुष्याकार मूर्तिको बनाकर उसके हृदय:भागमें यंत्रराजको रखकर; उद्वर्तनसे आच्छादितकर त्रिसंध्यामें तीन दिनतक खदिरकी अग्निमें संतप्तकर इस मंत्रको पढे । मंत्र-ओं देवदत्तं वेगेन आकर्षय २ माणिभद्र स्वाहा । यह तापन मंत्र है । इस विधानके करनेसे

माणिभद्रो देशान्तरस्थं मनुजं च नूनम् । अत्यन्तदूरस्थमपि क्रमेण समानयेद्यन्त्रवरो हि नूनम् ॥ ७ ॥ संपूजयेत्स्तापनशोषणाच्च श्रीमाणिभद्रो भगवान् हि वीरः ॥ ८ ॥

इति यन्त्रचि० चतुर्थ० आकर्षणाधिकारे माणिभद्रं नाम प्रथमं यंत्रम् ॥ १ ॥

श्रीशिव उवाच॥अतः परं प्रवक्ष्यामि यन्त्रं मित्रस्य दर्शनम्। रक्तचन्दनमिश्रेण स्वरक्तेन च भूर्जके ॥ १ ॥ मध्ये नाम लिखित्वा तु वर्तुलं वेष्टयेत्ततः । चतुर्दलं ततः कुर्याद्बीजयुक्तं मनोहरम् ॥ २ ॥ हूँकारं दलमध्ये तु प्रत्येकं विलिखेत् क्रमात् । एवं यन्त्रं तु संलिख्य पूजयेद्गन्धपुष्पकैः ॥ ३ ॥ बलिपुष्पोपहारैश्च सुगन्धद्रव्यसंयुतैः । प्रक्षिपेद्घृतमध्ये तु आकृष्टिस्त्रिदिनाद्भवेत् ॥ ४ ॥ इदं यन्त्रं महागोप्यं रक्षणीयं प्रयत्नतः । कस्याप्यग्रे न वक्तव्यं यदीच्छेत् सिद्धिमात्मनः ॥ ५ ॥

मित्रदर्शनयंत्रम् ।




इति श्रीयन्त्रचिन्तामणौ मित्रदर्शनं नाम द्वितीयं यन्त्रम् ॥ २ ॥

---

माणिभद्र देशांतरमें स्थित पुरुषोंको आकर्षित कर सकताहै। वीर भगवान् श्रीमाणिभद्रजीनेभी तापन शोषणादि क्रियाओंसे श्रीयंत्रेश्वरका पूजनकियाहै १-८॥

इति श्रीयंत्रचिन्तामणिकी चौथा पीठिकाके आकर्षण अधिकारमें माणिभद्रनाम प्रथमयंत्र ॥ १ ॥

श्रीशिवजी बोले-अब मित्रदर्शननाम यंत्रको कहता हूँ, विधान इस प्रकार है-लालचंदन, स्वरक्त इनको मिलाकर भोजपत्रके ऊपर एक गोलाकार चक्रको खैचकर चार दलोंसे युक्त बीचमें साध्यव्यक्तिके सानुस्वार नामके अक्षर लिख कर उक्त दलोंमें हूँ बीजको लिखै । फिर गंध पुष्पवाले इत्यादि पदार्थोंसे पूजनकर घृतमें स्थापित कर दे तो तीन दिनोंमेंही आकर्षण होजायगा, इस यन्त्रकी बड़े यत्नसे रक्षा करै अपनी सिद्धिकी इच्छा करनेवाला इस यंत्रको किसीको न दे और न किसीसे कहै ॥ १-५ ॥

इति यंत्रचिन्तामणिकी चौथीपीठिकाके आकर्षणाधिकारमें मित्रदर्शन नामवाला दूसरा यंत्र ॥ २ ॥

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि यन्त्रं त्रैपुरकं महत्। रोचनानीरयुक्तेन भूर्जपत्रे लिखेन्नरः ॥१॥ मध्ये नाम लिखित्वा तु ह्रींकारपुटितं शुभम् । षट्कोणं तु लिखेत्पश्चान्नामगर्भं मनोहरम् ॥ २ ॥ सौंकारान् विलिखेत् कोणे मध्यतो बिन्दुभूषितान्। एतद्यन्त्रं सुसम्पूज्य घृतमध्ये विनिक्षिपेत् ॥ ३ ॥ प्रत्यहं पूजयेन्नित्यं प्रार्थयेत् त्रिपुरान्ततः । आकर्षय महादेवि देवदत्तं मम प्रियम् ॥४॥ ऐं त्रिपुरे देवदेवेशि तुभ्यं दास्यामि याचितम् । अनेन प्रार्थयेद्देवीं त्रिपुरायन्त्रगां यजेत ॥ ५ ॥ एवं कृते सप्तमेऽह्नि आकृष्टिर्जायते शुभे॥६॥

त्रैपुराकाख्ययन्त्रम् ।




इति यन्त्रचिन्ता० त्रैपुरं नाम तृतीय यन्त्रम् ॥ ३ ॥

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि मानिन्याकर्षणं शुभम् । रहस्यं सर्वयन्त्राणां तत्क्षणात् सिद्धिदायकम् ॥ १ ॥ न वाच्यं यस्य कस्यापि यन्त्रराजं सुदुष्करम् । दक्षिणानामि-

श्रीशिवजी बोले–अब त्रैपुरक यंत्रको कहता हूँ । जलमिश्रित गोरोचनसे भोजपत्रके ऊपर षट्कोण यंत्रको लिख प्रतिकोणमें सौ बीजको लिखकर मध्य भागमें ह्रीं देवदत्त ह्रीं इसप्रकार आदि अंतमें ह्रीं बीजलगाकर साध्यव्यक्तिके नामाक्षर लिख उक्त यंत्रका गंधादिकोंसे विधानपूर्वक पूजनकर घृतके मध्यमें स्थापित करै, प्रतिदिन त्रिपुरासे प्रार्थना करै । प्रार्थनामंत्रः–आकर्षय महादेवि देवदत्तं मम प्रियम् । ऐं त्रिपुरे देवदेवेशि तुभ्यं दास्यामि याचितम् ॥ हे शुभे! इस विधानके करनेसे सातवें दिन आकर्षण होगा ॥ १–६ ॥

इति श्रीयन्त्रचिन्तामणिकी चौथी पीठिकाके आकर्षणाधिकारमें त्रैपुरक नामवाला तीसरा यन्त्र ॥ ३ ॥

श्रीशिवजी बोले–मानिनी स्त्रीके आकर्षणको कहता हूँ। यह सम्पूर्ण यन्त्रोंका रहस्यभूत तत् क्षणमें सिद्धिका देनेवाला है । यह यन्त्रराज बडा दुष्कर है, बिना अधिकारीके दूसरेसे कभी न कहै । दक्षिण अनामिका उंगलीके रुधिरसे

रक्तेन वामे करतले लिखेत् ॥ २॥ प्रणवं च तथा ह्रीं क्लीं एकपंक्तौ लिखेन्नरः । तिं हां स्वाहेति त्रितयं तस्याधो विलिखेत् क्रमात् ॥३॥ तस्याप्यधो लिखेन्नाम रमण्याश्चैव सुव्रते। त्रिकोणं वेष्टयेत्पश्चाद्बीजानामुपरि प्रिये ॥ ४ ॥ एवं कृत्वा तु संपूज्य तत्रैव कुसुमैः शुभैः । याममात्रेण सा नारी समायाति न संशयः ॥ ५ ॥ यन्त्रं श्रीकामराजाख्यं देवानामपि दुर्लभम् ॥ ६ ॥

ललनाकृति कामराजयंत्रम् ।




इति यन्त्रचि० ललनाकृति श्रीकामराजाख्यं चतुर्थं यंत्रम् ॥ ४ ॥

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि यन्त्रं वै देवमातृकम् । कर्षणं नरनारीणां शृणु देवि महाफलम् ॥ १ ॥ लाक्षारसं हरिद्रां च मञ्जिष्ठं भूर्जपत्रके । लेखनीयं प्रयत्नेन एकान्ते यन्त्रमुत्तमम् ॥ २ ॥ मध्ये नाम लिखित्वा तु त्रिकोणं वेष्टयेत्ततः। तद्यापि वेष्टयेत्पश्चात् वर्तुलं यत्नतः प्रिये ॥ ३ ॥

---

वाम हाथकी हथेलीपर एक त्रिकोण यंत्रको लिखे और उस यंत्रके भीतर तीन लकीरें खेंचे, प्रथम लकीरमें ओं, ह्रीं, क्लीं इन तीन बीजोंको, दूसरी पंक्तिमें तिं हां स्वाहा इन चारवर्णोंको और तीसरी पंक्तिमें साध्यव्यक्तिके नामाक्षरोंको लिख गन्ध पुष्पादिकोंसे पूजन करै तो साध्यस्त्री एक पहरमात्रमें आकर्षित होगी अर्थात् स्वयं प्राप्त होगी इसमें किसी प्रकारका सन्देह नहीं है। यह श्रीकामराज यन्त्र देवताओंको भी दुर्लभ है ॥ १–६ ॥

इति श्रीयंत्रचिन्तामणिकी चौथी पीठिकाके आकर्षणाधिकारमें कामराज नामवाला चौथा यन्त्र ॥ ४ ॥

श्रीशिवजी बोले–हे देवि ! नर और नारियोंके आकर्षणकारक, महाफलदायक देवमातृक यन्त्रको कहता हूं सुनो–लाखका रस, हलदी, मंजीठ इन वस्तुओंको एकत्रित करके भोजपत्रके ऊपर त्रिकोणयुक्त एक गोलाकार चक्र खेंचकर फिर उसके चारों ओर एक अंगुलके अन्तरसे एक और गोलाकार चक्र-

देवमातृकं चक्रम् ।




तस्योपरि स्वरा लेख्या अकाराद्यास्तु षोडश । ततस्तद्वेष्टयेत्सम्यग्रेखया नेत्रसंख्यया ॥ ४ ॥ तस्यैव पादधूल्याऽथ प्रकुर्याच्छालभञ्जिकाम् । तस्या योनौ तु संक्षिप्य यन्त्रराजं सुपूजितम् ॥ ५ ॥ एवंकृते तु कृष्टा सा समायाति न संशयः । बहुनाऽत्र किमुक्तेन पतिना सममानयेत् ॥ यन्त्रराजो महागोप्यो देवमातृकसंज्ञकः ६

इति श्रीयन्त्रचिन्तामणौ मानिन्याकर्षणं देवमातृकं पञ्चमं यन्त्रम् ॥ ५ ॥

चिन्तामणौ कल्पवरे सुकल्पे श्रीचन्द्रचूडस्य मुखाद्विनिर्गते । तस्मिंश्चतुर्थीं किल पीठिकामिमां चकार दामोदरविप्रवर्यः ॥ १ ॥ आकर्षणं नाम महाधिकारं पूर्णं द्वितीयं हि महाप्रभावम् । पञ्चैव यन्त्राणि महाप्रभावे रहस्यभूतानि तु कीर्तितानि ॥ २ ॥ इति यन्त्रचिन्तामणौ आकर्षणाधिकारः ॥

खींचकर फिर उसके धारे एक अंगुलके अन्तरसे एक और गोलाकार चक्रको दो रेखाओंसे युक्तकर खैंचे । फिर त्रिकोणके भीतर साध्यव्यक्तिके नामाक्षरोंको लिखकर अकारादि सोलह स्वरोंको दोनों गोलाकारोंके भीतर लिखे । पुनः उक्त साध्यव्यक्तिके चरणके नीचकी धूलि लाकर एक पुत्तलिका बनाकर उसके योनि(भग)में सुपूजित यंत्रराजको स्थापित करै। ऐसे करनेपर आकर्षित हो साध्यव्यक्तिको प्राप्त होगी, इसमें किसी प्रकारका सन्देह नहीं। विशेष कहनेसे क्या है पतिसहित प्राप्त होगी । इस देवमातृकसंज्ञकयंत्रको अत्यन्त गुप्त रखना योग्य है ॥१–६॥ इति श्रीयंत्र०नरनारीआकर्षण०मातृसंज्ञक पाँचवां यंत्र ॥५॥

श्रीशिवजी महाराजके मुखारविन्दसे निकले कल्पश्रेष्ठ चिन्तामणिनाम कल्पकी चौथी पीठिका इस प्रकार दामोदरजीने करी है ॥ १ ॥ महाधिकार और महाप्रभाव आकर्षण नाम चौथा अधिकार, इस अधिकारमें पाँचही रहस्यभूत आकर्षणयंत्र वर्णित हैं ॥ २ ॥ इति यंत्रचिंतामणौ आकर्षणाधिकारः ॥

१ पादभूस्था सहान्धतिरष्या जठेन च भूर्ने विरचयेत्पर्यः ।

## अथ स्तम्भनाधिकारः ।

नारायणीति निगदन्ति सदैव लोका यां विश्वमातरमिति प्रवदन्ति केचित । गन्धर्वयक्षसुरसिद्धगणैः स्तुतां तां विश्वेश्वरीमभयदां त्रिगुणां नमामि ॥ १ ॥ संस्तम्भनं नाम महाधिकारं विचारयामोऽत्र तु पीठिकायाम् । यन्त्राणि बीजानि शृणुष्व देवि संस्तम्भनानि क्षणसिद्धिदानि ॥ २ ॥

श्रीशिव उवाच ॥ शृणु देवि महायन्त्रं स्तम्भनं सर्ववैरिणाम् । विवादे व्यवहाराणां मुखस्तम्भो भवेद्ध्रुवम् ॥१॥ यदा कालवशाद्देवि कलहः संप्रजायते । तदा कुर्यान्महायन्त्रं जिह्वावेधनकं परम् ॥ २ ॥ रोचना भूर्जपत्रेण संलेख्यं सुविचक्षणैः । षट्कोष्ठकं प्रकुर्वीत रेखाद्वितयकेन च ॥ ३ ॥ कोष्ठमध्ये लिखेद्बीजं प्रतिकोष्ठमिहैककम् । हकारं च मकारं च लकारं तदनन्तरम् ॥ ४ ॥ वकारं च रकारं च यकारं च प्रतिष्ठितम् । ऊकारस्वरसंयुक्तं मस्तके रेफसंयुतम् ॥ ५ ॥ बिन्दुमात्रार्द्धसंयुक्तं संयोगे वर्णषट्ककम् । स्वर-

---

जिसको तीनोंलोक नारायणी इस सम्बोधनसे उच्चारण करते हैं, अन्यजीव जिसको विश्वमाता कहकर पुकारते हैं ऐसी गंधर्व, यक्ष, सुर, सिद्ध गणोंसे स्तुति करी हुई अभयप्रदान करनेवाली रजोगुण, सतोगुण, तमोगुणरूपा विश्वेश्वरी भगवतीको नमस्कार करता हूं ॥ १ ॥ इस पंचमपीठिकामें स्तम्भन नाम महाधिकारका विचार किया जाता है–हे देवि ! क्षणमात्रमें सिद्धिके देनेवाले स्तंभनयंत्र और बीजोंको श्रवण करो ॥ २ ॥

श्रीशिवजी बोले–हे देवि! व्यवहार विवादमें सम्पूर्ण शत्रुओंके मुखस्तम्भनकारक यंत्रको सुनो ॥ १ ॥ हे देवि । यदि कालवश कलह होजाय तो जिह्वावेधन नाम यंत्रको प्रयोग करै ॥२॥ विधान यथा–गोरोचनसे भोजपत्रके ऊपर दो रेखा षट्कोणयंत्रको लिखकर प्रतिकोणकी रेखाको त्रिशूल युक्तकरके अन्तरालमें टकार बीजोंको लिख तत्पश्चात् प्रत्येक कोणके भीतर ह, म, ल, व, र, य, इन सब वर्णोंको ऊपर नीचे स्थापितकर योजनापूर्वक अन्तमें ऊकार स्वरको मिलाकर बिंदु तथा रेफको ऊपरके भागमें लिखकर ईकार स्वरको मिलाय गंध

द्वितयसंयुक्तं बिन्दुना परिभूषितम् ॥६॥ एवं संजायते बीजं-मुखस्तम्भनसंज्ञकम् । कोष्ठे कोष्ठे तु संलेख्यमेकैकं बीजमुत्तमम् ॥ ७ ॥ एवं बीजानि संलेख्य: रेखाद्वितयकेन च । रेखोपरिगताः कृत्वा कोणदेशाश्चतुर्दिशम् ॥ ८ ॥ बाह्यरेखोर्ध्वधो लेख्या त्रिशूलान्मस्तकोपरि । सर्वतो रेखया चान्ते त्रिशूलान् विलिखेत्क्रमात् ॥ ९ ॥ एवमष्टादशसंख्यास्त्रिशूलाः संमतिष्ठिताः । शूलान्तराले सर्वत्र तथोपरि लिखेत्क्रमात् ॥ १० ॥ ठकारबीजानि षडेव चोर्ध्वमधोऽपि तावन्ति विलिख्य नूनम्। दिग्दक्षिणस्यां च तथा त्रिबीजं तावन्ति संख्यानि तथोत्तरे च ॥ ११ ॥ एवं हि बीजानि ठकारसंज्ञः श्रीसूर्यसंख्यानि विलिख्य पश्चात् । संपूज्य यन्त्रं विधिवत्प्रयत्नतो जपेत्तु मन्त्रं मनसा सुनिश्चलः ॥ १२ ॥ ॐ हल्र्ल्यूं ललल अमुकस्य मुखं स्तम्भय स्तम्भय ठः ५ स्वाहा ॥ अष्टोत्तरं चैव शतं जपित्वा मन्त्रं त्रिसंध्यं त्रिदिनं प्रयत्नात्। संपूजयेद्यन्त्रवरं त्रिसंध्यं पीतैश्च

शत्रुमुखगतिस्तंभनयंत्रम् ।




पुष्पादिकोंसे विधिपूर्वक पूजनकर निश्चिंत मन हो वक्ष्यमाण मंत्रका जप करे । मन्त्र ओं ह्लर्ल्यूं ललल अमुकस्य मुखं स्तम्भय २ ठः ५ स्वाहा । त्रिसंध्याकालोंमें

पुष्पैः कनकावदातैः ॥ १३ ॥ एवं कृते शत्रुगतिं मतिं च संस्तम्भयेद्यन्त्रवरो हि नूनम्। मूढो महामूक इव प्रजायते ग्रस्तो ग्रहेणैव रिपुर्महोग्रः ॥ १४ ॥

इति य० स्तम्भनाधिकारे शत्रुमुखगतिमतिस्तम्भनं नाम प्रथमं यन्त्रम् ॥ १ ॥

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि यात्रास्तम्भनमुत्तमम्। शिलासंपुटके लेख्यं पीतद्रव्येण शोभनम् ॥ १ ॥ रोचनाहरितालं च हरिद्रां च मनःशिलाम्। कुङ्कुमेन समायुक्तं पीतद्रव्यं प्रचक्षते ॥ २ ॥ कुम्भे मोहे च बीजानि एकपङ्क्तौ लिखेन्नरः। तस्याप्यधो लिखेन्नाम मोहे चान्ते प्रतिष्ठितम् ॥ ३ ॥ ततस्तद्वेष्टयेत्सम्यक् चतुष्कोणं तु रेखया। कोणे कोणे त्रिशूलं तु मध्ये मध्ये तथैव च ॥ ४ ॥ कृत्वैवमष्टौ शूलानि यन्त्ररेखोपरि स्थितान्। संपूज्य पीतकुसुमैर्यन्त्रराजं मनोहरम् ॥ ५ ॥

यात्रास्तम्भनयन्त्रम्।




---

•सात दिनतक इस यंत्रको अष्टोत्तरशत अथवा शत जपको यत्नपूर्वक करके त्रिसन्ध्या कालमें सुवर्णकी कांतिके समान पील वर्णवाले फूलोंसे पूजन करै। इस विधानके करनेसे शत्रुकी बुद्धि और गतिका स्तम्भन होगा और जैसे ग्रहसे ग्रहण होता है इसीकारण शत्रुरूप महाग्रह मूढकी समान मूकभावको प्राप्त हो शान्त होगा ॥ १३ १४ ॥

इति यंत्र०पांच० टी० स्तंभनाधि० शत्रुकीमुख गतिस्तंभन प्रथम यंत्र ॥१॥

---

श्रीमहादेवजी बोले–अब यात्रास्तम्भनकारक अतिउत्तम यंत्रको कहता हूं शिला संपुटके ऊपर पीले द्रव्यसे चतुष्कोणयंत्रको लिखकर चारो कोनों तथा चारो दिशाओंमें एक १ त्रिशूल लिखकर मध्यमें दो रेखामें कल्पना करै। प्रथम रेखामें कुंभ और मोह और दूसरी रेखामें साध्यव्यक्तिके सानुस्वार नामके अक्षर लिख अन्तमें मोह [illegible] को यत्नको युक्त करै अर्थात् देवदत्तं मोहे इस प्र[illegible] लिख [illegible], [illegible] हलदी, मनशिल, कुंकुम इनको

धूपैर्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः । एवं संपूज्य तद्यन्त्रं भूमिमध्ये क्षिपेत्ततः ॥ ६ ॥ मृदापूर्य समे देशे यन्त्रस्योपरि यत्नतः । गमनं स्तम्भयत्येव नात्र कार्या विचारणा ॥ ७ ॥ यथारोपितभाण्डोऽपि न यात्येव प्रिये सदा ॥ ८ ॥

इति यं० यात्रास्तम्भनं नाम द्वितीयं यन्त्रम् ॥ २ ॥

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि वाचः स्तम्भं च सुन्दरि । प्रतिवादिमुखस्तम्भं यन्त्रं ख्यातं तु भूतले ॥ १ ॥ पीतद्रव्येण संलेख्यं शिलासंपुटमध्यतः । रोचनाहरितालं च हरिद्रां च मनःशिलाम् ॥ २ ॥ कुंकुमेन समायुक्तं पीतद्रव्यं प्रचक्षते । मध्ये नाम लिखित्वा तु त्रिकोणं वेष्टयेत्ततः ॥ ३ ॥ ततस्तद्वेष्टयेत्सम्यग्वर्तुलं रेखयैकया । तस्योपरि दलान्यष्टौ प्रकुर्वीत ततः परम् ॥ ४ ॥ दलमध्ये लिखेद्बीजं लकारं बिन्दुभूषितम् । एवं चाष्टदले लेख्यं पूजयेत्कुसुमैः शुभैः ॥ ५ ॥ पीतवर्णैस्तथा धूपैर्दीपैर्नैवेद्यकैः शुभैः । ब्राह्मणं भोजयेच्चैवं

–पीले द्रव्य कहते हैं, फिर मनोहर यंत्रराजका पीले फूलोंसे पूजनकर गंधादि प्रदान करै और नानाप्रकारके भक्ष्य नैवेद्यादिकोंको अर्पण करै, पृथ्वीके मध्यमें स्थापितकर यंत्रके ऊपर मिट्टी डालकर बंदकर दे तौ निश्चयही गमन रुक जायगा इसमें किसी प्रकारका सन्देह नहीं । हे प्रिये ! मार्गमें आरोपित भांडभी स्थितही रहेगा अन्यका तो कहना ही क्या है ॥ १–८ ॥

इति यन्त्रचि० पाँचवाँ स्तम्भ०में यात्रास्तम्भन कारक दूसरा यंत्र ॥ २ ॥

श्रीशिवजी बोले–हे सुन्दरि ! अब वाणीस्तम्भनको कहता हूं और यह यंत्र प्रतिवादिमुखस्तम्भननामसे भूतलमें प्रसिद्ध है । विधान इस प्रकारसे है, उक्त पीले द्रव्यसे शिलासंपुटके मध्यमें त्रिकोण यन्त्रको लिखकर गोलाकार चक्रमें वेष्टितकर आठ दलसे सुशोभितकर उक्त त्रिकोणके भीतर साध्य व्यक्तिके नामके अक्षर और दलोंमें लं बीजोंको स्थापित करै । फिर पीले वर्णयुक्त सुगंधिवाले पुष्प, धूप, दीप, नैवेद्यादिकोंसे यन्त्रराजका पूजनकर पायस ( खीर ) तथा गुडमिश्रित पदार्थोंसे एक ब्राह्मणको भोजनकरा इस

१ धं दर्शिकाः कुङ्कुमं कनकं रक्तोत्पलम् । मधुरं पीतपुष्पं नारिकेलं च ॥ १ ॥–

प्रतिवादिमुखस्तम्भनयन्त्रम् ।




पायसेन गुडेन च ॥ ६ ॥ ततो निखन्य भूमौ तु स्थापयेत् पूर्ववत्ततः । विवादे व्यवहारे च शास्त्रचर्चासु च प्रिये॥७॥ प्रतिवादिमुखस्तम्भो जायते नात्र संशयः । एतद्यन्त्रं महादेवि सुगोप्यं कथितं तव ॥ ८ ॥

इ० य० प्रतिवादिमुखस्तम्भनं नाम तृतीयं यन्त्रम् ॥ ३ ॥

श्रीशिव उवाच॥अतःपरं प्रवक्ष्यामि शत्रोर्वक्त्रस्य मुद्रणम् । यदा संजायते वादः शत्रूणां सह सुव्रते ॥ १ ॥ तदा यन्त्रं प्रकुर्वीत सुगमं फलसिद्धिदम् । खटिकया तु संलेख्यं स्वभित्तौ वेगतः प्रिये ॥ २ ॥ मध्ये नाम लिखित्वा तु शत्रोस्तु विधि-

---

–विधानपूर्वक पृथ्वीको खोदकर यंत्रको स्थापित करके ऊपर मिट्टी डालकर बन्दकर दे तो व्यवहार, विवाद, शास्त्रचर्चाआदिकोंमें प्रतिवादीके मुखका स्तंभन होजायगा । हे देवि ! यह परमगुप्त यंत्र मैंने तुमसे कहा है ॥१–८॥

इति यंत्र० पाँचवीं० प्रतिवादिमुखस्तम्भन नामवाला तीसरा यंत्र ॥ ३ ॥

---

श्रीशिवजी बोले–हे सुव्रत ! शत्रुके साथ विवाद होनेमें शत्रुके मुखको बन्द करनेवाला यंत्रको कहता हूं । हे प्रिये ! जिस समय शत्रुसे विवाद हो उसी समय शीघ्रसिद्धिके देनेवाले यंत्रका प्रयोग करै । विधि–अपने स्थानकी दीवारके ऊपर खडियामिट्टीसे गोलाकार चक्र खैंचकर आठों दिशाओंमे त्रिशूल

---

–माल्याण्येतानि पुष्पाणि यथालाभं वरानने । अन्यानि पीतवर्णानि न ग्राह्याणि कदाचन ॥२॥ हे वरानने ! कुटज, चम्पा, स्वर्णकेतकी, धतूरा, नागकेशर, पीतकुसुमके वचनसे इनकेही यथाशक्ति पीले फूल जितने मिलें उन्हें ग्रहण करना योग्य है अन्यप्रकारके नहीं ॥ १ ॥ २ ॥

शत्रुमुखस्तम्भनयन्त्रम् ।




वर्तिमये । तस्योपरि स्थिता रेखा वसुसंख्याष्टदिक्क्रमात् ॥ ३ ॥ रेखान्ते च त्रिशूलानि तल्लिखेच्च दिगष्टके । तत्रैव तु सुसंपूज्य श्वेतपुष्पैः फलैः शुभैः ॥ ४ ॥ अन्यैश्च श्वेतगन्धैश्च श्वेतवस्त्रैर्मनोहरैः । ब्राह्मणं भोजयेच्चैकं श्रीशिवः प्रीयतामिति ॥ ५ ॥ वादे पिशुनतायां च मुखस्तम्भं करोत्ययम् ॥ ६ ॥

इति श्रीयन्त्रचिं० ना० म० प्र० उ० पं० दा० स्तं० शत्रुमुखस्तम्भनं चतुर्थं यन्त्रम् ॥ ४ ॥

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि वह्निस्तम्भं मनोहरम् । दिव्यकाले प्रकुर्वीत यन्त्रराजं सुशोभनम् ॥१॥ पीतद्रव्येण संलेख्यं भूर्जपत्रे वरानने । साध्यनाम लिखेन्मध्ये क्रों नामाद्यन्तसंपुटम् ॥ २ ॥ उपर्यधोऽपि विलिखेत्क्रोंकारं सुमनो-

---

लगाय यंत्रको निर्माणकर सानुस्वार साध्यव्यक्तिके नामाक्षर लिखकर वहां स्थित यंत्रका श्वेतपुष्प, फल, सुगंध, मनोहर श्वेतवस्त्र इनसे पूजनकर एक ब्राह्मणको भोजन करावे और "श्रीशिवः प्रीयताम्" इसको पढताजाय तो इस यंत्रके प्रतापसे वाद और पिशुनतामें शत्रुका मुखस्तम्भन होगा ॥१-६॥

इति यंत्रचिन्तामणिकी पाँचवीं पीठिकाके स्तम्भनाधिकारमें शत्रुमुखस्तम्भननामक चौथा यंत्र ॥ ४ ॥

---

श्रीशिवजी बोले-अब मनोहर अग्निस्तंभन यंत्रको कहता हूं-इस यंत्रराजका दिव्यकालमें प्रयोग करना योग्य है । विधानयथा-पीले द्रव्यसे भोजपत्रके ऊपर दो रेखायुक्त चतुष्कोणयंत्रको लिखकर पुनः उसके भीतर एक चतुष्कोण यंत्र और लिखकर बहिर्भागके चारों कोनोंमें दो दो त्रिशूल लगाकर भीतरके चतुष्कोणके उदरमें पूर्वादि चारों दिशाओंमें क्रों बीजको लिखकर सानु-

हरम् । ततस्तद्वेष्टयेद्देवि चतुष्कोणं तु रेखया ॥ ३ ॥ तस्योपरि चतुष्कोणं प्रकुर्वीत द्विरेखया । कोणान्तराले संलेख्यं लकारं बिन्दुभूषितम् ॥ ४ ॥ एवं चतुष्टयं लेख्यं लकाराणां तु बीजकम् । कोणान्ते तु पृथग्लेख्यौ त्रिशूलौ सर्वथा प्रिये॥ ५॥ एवमष्टत्रिशूलानि विलिख्याथ प्रपूजयेत । संपूज्य ब्राह्मणं भोज्य यन्त्रं भूमौ विनिक्षिपेत् ॥ ६ ॥ वह्न्युदकमार्गे च मध्ये यन्त्रं विधाय च । यावत्तस्योपरि याति सलिलं वरवर्णिनि ॥ ७ ॥ तावदग्नेर्महास्तम्भो जायते नात्र संशयः । दिव्यस्तम्भकरं नाम यन्त्रं देवैः सुपूजितम् । न देयं यस्य कस्यापि यदीच्छेत्सिद्धिमात्मनः ॥ ८ ॥

वह्निस्तम्भनयन्त्रम् ।




इति श्रीयन्त्रचि० ना० म० प्र० उ० प० स्त० दा० वह्निस्तम्भनं नाम पञ्चमं यन्त्रम् ॥ ५ ॥

---

—खार साध्यव्यक्तिके नामाक्षरोंको लिख मध्यकोणके बहिर्भागमें लं बीजोको लिखे । फिर गंधादिकोंसे उक्त यंत्रराजका पूजनकर यथाशक्ति ब्राह्मणको पूजित कर भोजनकरा यंत्रको पृथ्वीमें गाडदे और उस यंत्रके ऊपर जलका व्यवहार करे । हे वरवर्णिनि! जबतक उसके ऊपर जल व्यवहार होता रहेगा तबतक अग्निका महास्तंभन होगा । इसमे किसी प्रकारका संदेह नहीं है । हे देवि ! दिव्यस्तम्भनकारक इस यंत्रका देवताओंने भी पूजन किया है । अपनी सिद्धिकी इच्छा करनेवाला साधक अधिकारीके विना अन्य किसीको न दे१-८।

इति यंत्रचिन्तामणिकी पाँचवी पीठिकाके स्तंभनाधिकारमें अग्निस्तंभनकारक पांचवां यंत्र ॥ ५ ॥

श्रीशिव उवाच ॥ शृणु देवि प्रवक्ष्यामि यन्त्रं वह्निनिवारणम् । यस्मिन्गृहे स्थितं यन्त्रं तत्र नाग्निभयं क्वचित् ॥ १ ॥ यस्य हस्ते सदा तिष्ठेद्यन्त्रराजं मनोहरम् । स्वप्नेऽप्यग्निभयं तस्य कदाचिन्नोपजायते ॥ २ ॥ बलात्कारेण कर्तव्यमग्निनिग्रहकं प्रिये । विद्यागमे तथा मन्त्रैरौषधे वा बलाधिके ॥ ३ ॥ पादस्पृष्टो यथा सर्पो दशत्येव न मन्यते । तथा स्तम्भोऽपि देवेशि बलात्कारेण वा जनैः ॥ ४ ॥ अपमृत्युं यथा देवि हरेद्वै वैद्यको रसः । तथा यन्त्रोऽपि देवेशि अवान्तरभयं हरेत् ॥५॥ श्रीखण्डरोचनहिमेन तु लेखनीयं यन्त्रं तु भूर्जे विधिवत्तु विस्तृते । नाम स्वकीयं तु विलिख्य मध्ये सुवेष्टयेद्वर्तुलरेखया तथा ॥ ६ ॥ तस्योपरि लिखेन्नूनं वकारं बिन्दुभूषितम् । पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरे पुनः ॥ ७ ॥ पुनस्सर्वं तु संवेष्ट्य चतुष्कोणं तु रेखया । त्रिलोहवेष्टितं कृत्वा बाहुमूले गलेऽथवा ॥ ८ ॥ अथवा गृह-

अग्निस्तंभनयन्त्रम् ।




श्रीशंकरजी बोले—हे देवि ! अब अग्निनिवारण यंत्रको कहताहूं सुनो । जिस गृहमें यह यंत्र स्थित रहेगा उस गृहमें कदापि अग्निका भय नहीं होगा और जिस किसीके हाथमें यह मनोहर यंत्रराज सदा वर्तमान रहेगा, स्वप्नमें भी उसको कदापि अग्निका भय न होगा । हे प्रिये ! विद्यागमन, मंत्र, औषध अथवा बलअधिक होनेपर बलात्कारसे अग्निका ग्रहण करना योग्य है, हे देवेशि! जैसे कि पादसे स्पर्श कियाहुआ सर्प काटताही है,ऐसेंही मनुष्यों करके प्रयोग कियाहुआ स्तम्भनयंत्र फलदायक होताही है । हे देवि ! जैसे कि वैद्यका रस अपमृत्युको हरण करता है तैसेही यह यंत्रराज अवान्तरभयको हरण करताहै । विधान यथा—लाल चंदन, गोरोचन और हिमसे सुविस्तृत भोजपत्रपर विधान पूर्वक एक गोलाकार चक्र मध्यमें साध्यव्यक्तिके नामको लिख बाहिर्भागमें अर्थात् पूर्वादि चारों दिशाओंमें वं बीजको लिख गंधपुष्पादिकोंसे पूजनकर त्रिलोहके तावीजमें बंदकर गले अथवा बाहुमूलमें धारणकरै,

